# ॥ श्री महात्रिपुरसुन्दरी हृदय स्तोत्रं ॥

देव्युवाच ।

देवदेव महादेव सच्चिदानन्दविग्रहा ।

सुन्दर्याहृदयं स्तोत्रं परं कौतूहलं विभो ॥१॥

ईश्वरौवाच ।

साधु साधुत्वया प्राज्ञे लोकानुग्रहकारकं ।

रहस्यमपिवक्ष्यामि सावधानमनाःशृणु ॥२॥

श्रीविद्यां जगतां धात्रीं सर्ग्गस्थितिलयेश्वरीं ।

नमामिललितां नित्यां भक्तानामिष्टदायिनीं ॥३॥

बिन्दुत्रिकोणसम्युक्तं वसुकोणसमन्वितं ।

दशकोणद्वयोपेतं चतुर्द्दश समन्वितं ॥४॥

दलाष्टकेसरोपेतं दलषोडशकान्वितं ।

वृत्तत्रययान्वितम्भूमिसदनत्रयभूषितं ॥५॥

नमामि ललिताचक्रं भक्तानामिष्टदायकं ।

अमृताम्भोनिधिन्तत्र रत्नद्वीपं नमाम्यहं ॥६॥

नानावृक्षमहोद्यानं वन्देहं कल्पवाटिकां ।

सन्तानवाटिकांवन्दे हरिचन्दनवाटिकां ॥७॥

मन्दारवाटिकां पारिजातवाटीं मुदा भजे ।

नमामितव देवेशि कदम्बवनवाटिकां ॥८॥

पुष्यरागमहारत्नप्राकारं प्रणमाम्यहं ।

पत्मरागादिमणिभिःप्राकारं सर्व्वदा भजे ॥९॥

गोमेदरत्नप्राकारं वज्रप्राकारमाश्रये ।

वैडूर्यरत्नप्राकारम्प्रणमामि कुलेश्वरी ॥१०॥

इन्द्रनीलाख्यरत्नानां प्राकारं प्रणमाम्यहं ।

मुक्ताफलमहारत्नप्राकारम्प्रणमाम्यहं ॥११॥

मरताख्यमहारत्नप्राकाराय नमोनमः ।

विद्रुमाख्यमहारत्नप्राकारम्प्रणमाम्यहं ॥१२॥

माणिक्यमण्डपं रत्नसहस्रस्तम्भमण्डपं ।

ललिते! तवदेवेशि भजाम्यमृतवापिकां ॥१३॥

आनन्दवापिकां वन्देविमर्शवापिकां भजे ।

भजेबालातपोल्गारं चन्द्रिकोगारिकां भजे ॥१४॥

महाशृङ्गारपरिखां महापत्माटवीं भजे ।

चिन्तामणिमहारत्नगृहराजं नमाम्यहं ॥१५॥

पूर्व्वांनायमयं पूर्व्वद्वारं देवि नमाम्यहं ।

दक्षिणांनायरूपन्तेदक्षिणद्वारमाश्रये ॥१६॥

नमामि पश्चिमद्वारं पश्चिमाम्नाय रूपकं ।

वन्देहमुत्तरद्वारमुत्तराम्नायरूपकं ॥१७॥

ऊर्द्ध्वाम्नायमयं वन्दे ह्यूर्द्धद्वारं कुलेश्वरि ।

ललितेतव देवेशि महासिहासनं भजे ॥१८॥

ब्रह्मात्मकं मञ्चपादमेकं तव नमाम्यहं ।

एकंविष्णुमयं मञ्चपादमन्यं नमाम्यहं ॥१९॥

एकं रुद्रमयं मञ्चपादमन्यं नमाम्यहं ।

मञ्चपादंममाम्येकं तव देवीश्वरात्मकं ॥२०॥

मञ्चैकफलकं वन्दे सदाशिवमयं शुभं ।

नमामितेहंसतूलतल्पकं परमेश्वरी! ॥२१॥

नमामिते हंसतूलमहोपाधानमुत्तमं ।

कौस्तुभास्तरणंवन्दे तव नित्यं कुलेश्वरी ॥२२॥

महावितानिकां वन्दे महायविनिकां भजे ।

एवम्पूजागृहं ध्यात्वा श्रीचक्रे श्रीशिवां भजे ॥२३॥

स्वदक्षिणे स्थापयामि भागे पुष्पाक्षतादिकान् ।

अमितांस्तेमहादेवि दीपान् सन्दर्शयाम्यहं ॥२४॥

मूलेन त्रिपुराचक्रं तव सम्पूज्ययाम्यहं ।

त्रिभिःखण्डैस्तवख्यातैः पूजयामि महेश्वरि! ॥२५॥

वाय्वग्नि जलसम्युक्तं प्राणायामैरहं शिवै ।

शोषाणान्दाहनं चैव करोमि प्लावनं तथा ॥२६॥

त्रिवारं मूलमन्त्रेण प्राणायामं करोम्यहं ।

पाषण्डकारिणोभूता भूमौये चान्तरिक्षके ॥२७॥

करोम्यनेन मन्त्रेण तालत्रयमहं शिवे ।

नारायणोहम्ब्रह्माहं भैरवोहं शिवोस्म्यहं ॥२८॥

देवोहं परमानन्दोस्म्यहं त्रिपुरसुन्दरि ।

ध्यात्वावै वज्रकवचं न्यासं तव करोम्यहं ॥२९॥

कुमारीबीजसम्युक्तं महात्रिपुरसुन्दरि!।

मांरक्षरक्षेति हृदि करोम्यञ्जलिमीश्वरि!॥३०॥

महादेव्यासनायेति प्रकरोम्यासनं शिवे ।

चक्रासनंनमस्यामि सर्व्वमन्त्रासनं शिवे ॥३१॥

साद्ध्यसिद्धासनं मन्त्रैरेभिर्युक्तं महेश्वरि ।

करोम्यस्मिन्चक्रमन्त्रैर्देवतासनमुत्तमं ॥३२॥

करोम्यथ षडङ्गाख्यं मातृकां च कलां न्यसे ।

श्रीकण्टङ्केशवं चैव प्रपञ्चं योगमातृकां ॥३३॥

तत्वन्यासं ततः कूर्व्वे चतुष्पीटं यथाचरे ।

लघुषोढान्ततः कूर्व्वे शक्तिन्यासं महोत्तमं ॥३४॥

पीटन्यासं ततः कुर्वे देवतावाहनं प्रिये ।

कुङ्कमन्यासकञ्चैव चक्रन्यासमथाचरे ॥३५॥

चक्रन्यासं ततः कुर्व्वे न्यासं कामकलाद्वयं ।

षोडशार्ण्णमहामन्त्रैरङ्गन्यासङ्करोम्यहं ॥३६॥

महाषोढां ततः कुर्व्वे शाम्भवं च महाप्रिये ।

ततोमूलम्प्रजप्त्वाथ पादुकाञ्च ततः परं ॥३७॥

गुरवे सम्यगर्च्याथ देवतां हृदिसम्भजे ।

करोमिमण्डलं वृत्तं चतुरश्रं शिवप्रिये ॥३८॥

पुष्पैरभ्यर्च्च्यसाधारं शङ्खं सम्पूजयामहं ।

अर्च्चयामिषडङ्गेन जलमापूरयाम्यहं ॥३९॥

ददामि चादिमं बिन्दुं कुर्वे मूलाभिमन्त्रितं ।

तजजलेनजगन्मातस्त्रिकोणं वृत्तसम्युतं ॥४०॥

षट्कोणं चतुरश्रञ्च मण्डलं प्रणमाम्यहं ।

विद्ययापूजयामीह त्रिखण्डेन तु पूजनं ॥४१॥

बीजेनवृत्तषट्कोणं पूजयामि तवप्रिये ।

तस्मिन्देवीकलात्मानां मणिमण्डलमाश्रये ॥४२॥

धूम्रार्च्चिषं नमस्यामि ऊष्मां च ज्वलनीं तथा ।

ज्वालिनीञ्च नमस्यामि वन्देहं विस्पुलिङ्गिनीं ॥४३॥

सुश्रियं च सुरूपाञ्चकम्पिलां प्रणमाम्यहं ।

नौमिहव्यवहां नित्यां भजे कव्यवहां कलां ॥४४॥

सूर्याग्निमण्डलां तत्र सकलाद्वादशात्मकं ।

अर्घ्यपाद्यमहन्तत्र तपिनीं तापिनीं भजे ॥४५॥

धूम्रां मरीचीं वन्देहं ज्वालिनीं मरुहं भजे ।

सुषुम्नाम्भोगदां वन्दे भजे विश्वां च बोधिनीं ॥४६॥

धारिणीं च क्षमां वन्दे सौरीरेताः कलाभजे ।

आश्रयेमण्मलं चान्द्रं तत्कलाषोडशात्मकं ॥४७॥

अमृतां मानदां वन्दे पूषां तुष्टीं भजाम्यहं ।

पुष्टिम्भजे महादेवि भजेहं च रति धृति ॥४८॥

रशनि चन्द्रिकां वन्दे कान्तीं जोत्सना श्रियं भजे ।

नेऔमिप्रीतिञ्चागतदाञ्चपूर्णिमाममृताम्भजे ॥४९॥

त्रिकोणलेखनं कुर्व्वे आकारादिसुरेखकं ।

हलक्षवर्ण्णसम्युक्तंस्पीतं तं हंसभास्करं ॥५०॥

वाक्कामशक्ति संयुक्तं हंसमाराधयाम्यहं ।

वृत्ताद्बहिःषडश्रस्यलेखनं प्रकरोम्यहं ॥५१॥

पुरतोग्न्यादिषल्ख़ोणं कखगेनार्च्चयाम्यहं ।

श्रीविद्ययासप्तवारं करोम्यत्राभि मन्त्रितं ॥५२॥

समर्प्पयामि देवेशि तस्मात् गन्धाक्षतादिकं ।

ध्यायामिपूजाद्रव्येषु तत् सर्व्वं विद्ययायुतं ॥५३॥

चतुर्न्नवतिसन्मन्त्रान् स्पृष्ट्वा तत् प्रजपाम्यहं ।

वह्नेर्द्दशकलाःसूर्यकलाद्वादशकं भजे ॥५४॥

आश्रये शोडषकलास्तत्र चन्द्रमसस्तदा ।

सृष्टिम्वृद्धिम् स्मृतिम् वन्दे मेधाम् कान्तेएम् तथैव च ॥५५॥

लक्ष्मीम् द्युथिम् स्थिताम् वन्दे स्थितिम् सिद्धिम् भजाम्यहम् ।

एताब्रह्मकलावन्दे जरान्थाम् पालिनीम् भजे ॥५६॥

शान्ति नमामीश्वरीं च रतीं वन्दे च कारिकां ।

वरदांह्लादिनीं वन्दे प्रीति दीर्घां भजाभम्यहं ॥५७॥

एता विष्णुअकलावन्दे तीक्षणां रौद्रि भयां भजे ।

निद्रान्तन्द्रीं क्षुधां वन्दे नमामि क्रोधिनीं क्रियां ॥५८॥

उल्कारीं मृत्युरूपां च एता रुद्रकला भजे ।

नीलाम्पीतां भजे श्वेतां वन्देहमरुणां कलां ॥५९॥

अनन्तख्यां कलाञ्चेति ईश्वरस्य कलाभजे ।

निवृत्तिञ्चप्रतिष्ठाञ्चविद्यांशान्ति भजाम्यहं ॥६०॥

रोधिकां दीपिकां वन्दे रेचिकां मोचिकां भजे ।

परांसूक्षामृतां सूक्षां प्रणामि कुलेश्वरि! ॥६१॥

ज्ञानाख्याञ्चनमस्यामि नौमिज्ञानामृतां कलां ।

आप्यायिनींव्यापिनीं च मोदिनीं प्रणमाम्यहं ॥६२॥

कलाः सदाशिवस्यैताः षोडश प्रणमाम्यहं ।

विष्णुयोनिनमस्यामि मूलविद्यां नमाम्यहं ॥६३॥

त्रैयम्बकम् नमस्यामि तद्विष्णुम् प्रणमाम्यहम् ।

विष्णुयोनिम्नमस्यामि मूलविद्याम् नमाम्यहम् ॥६४॥

अमृतं मन्त्रितं वन्दे चतुर्न्नवतिभिस्तथा ।

अखण्डैकरसानन्दकरेपरसुधात्मनि ॥६५॥

स्वच्छन्दस्पपुरणं मन्त्रं नीधेहि कुलरूपिणि ।

अकुलस्थामृताकारेसिद्धिज्ञानकरेपरे ॥६६॥

अमृतं निधेह्यस्मिन् वस्तुनिक्लिन्नरूपिणि ।

तद्रूपाणेकरस्यत्वङ्कृत्वाह्येतत् स्वरूपिणि ॥६७॥

भूत्वा परामृताकारमयि चित् स्पुरणं कुरु ।

एभिर्म्मनूत्तमैर्वन्देमन्त्रितं परमामृतं ॥६८॥

जोतिम्मयमिदं वन्दे परमर्घ्यञ्च सुन्दरि ।

तद्विन्दुभिर्मेशिरसि गुरुं सन्तर्प्पयाम्यहं ॥६९॥

ब्रह्मास्मिन् तद्विन्दुं कुण्डलिन्यां जुहोम्यहं ।

हृच्चक्रस्तां-महादेवींमहात्रिपुरसुन्दरीं ॥७०॥

निरस्तमोहतिमिरां साक्षात् संवित् स्वरूपिणीं ।

नासापुटात्परकलामथनिर्ग्गमयाम्यहं ॥७१॥

नमामियोनिमद्ध्यास्थां त्रिखण्डकुसुमांञ्जलि ।

जगन्मातर्महादेवियन्त्रेत्वां स्थापयाम्यहं ॥७२॥

सुधाचैतन्यमूर्त्तीं ते कल्पयामिमनुं तव ।

अनेनदेविमन्त्रयन्त्रेत्वां स्थापयाम्यहं ॥७३॥

महापत्मवनान्तस्थे कारणानन्तविग्रहे ।

सर्वभूतहितेमातरेह्यपि परमेश्वरि ॥७४॥

देवेशी भकतसुलभे सर्व्वाभरणभूषिते ।

यावत्वम्पूजयामीहतावत्त्वं सुस्थिराभव ॥७५॥

अनेन मन्त्रयुग्मेन त्वामत्रावाहयाम्यहं ।

कल्पयामिनमः पादमर्घ्यं ते कल्पयाम्यहं ॥७६॥

गन्धतैलाभ्यञ्जनञ्चमज्जशालाप्रवेशं ।

कल्पयामिनमस्तस्मै मणिपीठोप्रवेशनं ॥७७॥

दिव्यस्नानीयमीशानि गृहाणोद्वर्त्तनं शुभे ।

गृहाणोष्णादकस्नानङ्कल्पयाम्यभिषेचनं ॥७८॥

हेमकुम्भायुतैः स्निग्द्धैः कल्पयाम्यभिषेचनं ।

कल्पयामिनमस्तुभ्यं धएऔतेन परिमार्ज्जनं ॥७९॥

बालभानु प्रतीकाशं दुकूलं परिधानकं ।

अरुणेनदुकुलेनोत्तरीयं कल्पयाम्यहं ॥८०॥

प्रवेशनं कल्पयामि सर्वाङ्गानि विलेपनं ।

नमस्तेकल्पयाम्यत्र मणिपीठोपवेशनं ॥८१॥

अष्टगन्धैः कल्पयामि तवलेखनमम्बिके ।

कालागरुमहाधूपङ्कल्पयामि नमश्शिवे ॥८२॥

मल्लिकामालातीजाति चम्पकादि मनोरमैः ।

अर्च्चिताङ्कुसुमैर्म्मालां कल्पयामिनमश्शिवे ॥८३॥

प्रवेशनं कल्पयामि नमो भूषणमण्डपे ।

उपवेश्यंरत्नपीठे तत्रते कल्पयाम्यहं ॥८४॥

नवमाणिक्यमकुटं तत्रते कल्पयाम्यहं ।

शरच्चन्द्रनिभंयुक्तं तच्चन्द्रशकलं तव ॥८५॥

तत सीमन्तसिन्दूरं कस्तूरीतिलकं तव ।

कालाञ्जनङ्कल्पयामि पालीयुगलमुत्तमं ॥८६॥

मणिकुण्डलयुग्मञ्च नासाभरणमीश्वरी!।

ताटङ्कयुगलन्देवि ललिते धारयाम्यहं ॥८७॥

अथाद्यां भूषणं कण्ठे महाचिन्ताकमुत्तमं ।

पदकन्ते कल्पयामि महापदकमुत्तमं ॥८८॥

मुक्तावलीं कल्पयामि चैकावलि समन्वितां ।

छन्नवीरञ्चकेयूरयुगलानां चतुष्टयं ॥८९॥

वलयावलिमालानीं चोर्मिकावलिमीश्वरि ।

काञ्चीदामकटीसूत्रंसौभग्याभरणं च ते ॥९०॥

त्रिपुरे पादकटकं कल्पये रत्ननूपुरं ।

पादाङ्गलीयकन्तुभ्यं पाशमेकं करेतव ॥९१॥

अन्ये करेङ्कुशं देवि पूण्ड्रेक्षुधनुषं तव ।

अपरेपुष्पबाणञ्च श्रीमन्माणिक्यपादुके ॥९२॥

तदावरण देवेशि महामञ्चादिरोहणं ।

कामेश्वराङ्कपर्यङ्कमुपवेशनमुत्तमं ॥९३॥

सुधया पूर्ण्णचषकं ततस्तत् पानमुत्तमं ।

कर्प्पूरवीटिकान्तुभ्यं कल्पयामि नमः शिवे ॥९४॥

आनन्दोल्लासविलसद्धंसं ते कल्पयाम्यहं ।

मङ्गलारात्रिकंवन्दे छत्रं ते कल्पयाम्यहं ॥९५॥

चामरं यूगलं देविदर्प्पणं कल्पयाम्यहं ।

तालव्रिन्तङ्कल्पयामिगन्धपुष्पाक्षतैरपि ॥९६॥

धूपं दीपश्चनैवेद्यं कल्पयामि शिवप्रिये ।

अथाहम्बैन्दवे चक्रे सर्वानन्दमयात्मके ॥९७॥

रत्नसिहासने रम्ये समासीनां शिवप्रियां ।

उद्यद्भानुसहस्राभाञ्जपापुष्पसमप्रभां ॥९८॥

नवरत्नप्रभायुक्तमकुटेन विराजितां ।

चन्द्ररेखासमोपेताङ्कस्तूरितिलकाङ्कितां ॥९९॥

कामकोदण्डसौन्दर्यनिर्ज्जितभ्रऊलतायुतां ।

अञ्जनाञ्चितनेत्रान्तुपत्मपत्रनिभेषणां ॥१००॥

मणिकुण्डलसम्युक्त कर्ण्णद्वयविराजितां ।

ताम्बूलपूरितमुखींसुस्मितास्यविराजितां ॥१०१॥

आद्यभूषणसम्युक्तां हेमचिन्ताकसंयुतां ।

पदकेनसमोपेतां महापदकसंयुतां ॥१०२॥

मुक्ताफलसमोपेतामेकावलिसमन्वितां ।

कौसुभाङ्गदसंयुक्तचतुर्बाहुसमन्वितां ॥१०३॥

अष्टगन्धसमोपेतां श्रीचन्दनविराजितां ।

हेमकुम्भोपमप्रख्यस्तनद्वन्दविराजितां ॥१०४॥

रक्तवस्त्रपरीधानां रक्तकञ्चुकसंयुतां ।

सूक्ष्मरोमावलियुक्ततनुमद्ध्यविराजिताम् ॥१०५॥

मुक्तामाणिक्यखचित काञ्चीयुतनितम्बनीं ।

सदाशिवाङकस्थबृहन्महाजघनमण्डलाम् ॥१०६॥

कदलिस्तम्भसंराजदूरुद्वयविराजितां ।

कपालीकान्तिसङ्काशजङ्घायुगलशोभिताम् ॥१०७॥

ग्रूढगुल्फद्वेयोपेतां रक्तपादसमन्वितां ।

ब्रह्मविष्णुमहेशादिकिरीटस्फूर्ज्जिताङ्घ्रिकाम् ॥१०८॥

कान्त्या विराजितपदां भक्तत्राण परायणां ।

इक्षुकार्मुकपुष्पेषुपाशाङ्कुशधरांशुभां ॥१०९॥

संवित् स्वरूपिणीं वन्दे ध्यायामि परमेश्वरीं ।

प्रदर्शयाम्यथशिवेदशामुद्राः फलप्रदाः ॥११०॥

त्वां तर्प्पयामित्रिपुरे त्रिधना पार्व्वति ।

अग्नएऔमहेशदिग्भागे नैरृत्यां मारुते तथा ॥१११॥

इन्द्राशावारुणी भागे षडङ्गान्यर्च्चये क्रमात् ।

आद्याङ्कामेश्वरीं वन्दे नमामि भगमालिनीं ॥११२॥

नित्यक्लिन्नां नमस्यामि भेरुण्डां प्रणमाम्यहं ।

वह्निवासांनमस्यामि महाविद्येश्वरीं भजे ॥११३॥

शिवदूति नमस्यामि त्वरितां कुल सुन्दरीं ।

नित्यांनीलपताकाञ्च विजयां सर्व्वमङ्गलां ॥११४॥

ज्वालामालाञ्च चित्राञ्च महानित्यां च संस्तुवे ।

प्रकाशानन्दनाथाख्याम्पराशक्तिनमाम्यहं ॥११५॥

शुक्लदेवीं नमस्यामि प्रणमामि कुलेश्वरीं ।

परशिवानन्दनाथाख्याम्पराशक्ति नमाम्यहं ॥११६॥

कौलेश्वरानन्दनाथं नौमि कामेश्वरींसदा ।

भोगानन्दंनमस्यामि सिद्धौघञ्च वरानने ॥११७॥

क्लिन्नानन्दं नमस्यामि समयानन्दमेवच ।

सहजानन्दनाथञ्चप्रणमामि मुर्म्मुहु ॥११८॥

मानवौघं नमस्यामि गगनानन्दगप्यहं ।

विश्वानन्दंनमस्यामि विमलानन्दमेवच ॥११९॥

मदनानन्दनाथञ्च भुवनानन्दरूपिणीं ।

लीलानन्दंनमस्यामि स्वात्मानन्दं महेश्वरि ॥१२०॥

प्रणमामिप्रियानन्दं सर्व्वकामफलप्रदं ।

परमेष्टिगुरुंवन्दे परमङ्गुरुमाश्रये ॥१२१॥

श्रीगुरुं प्रणमस्यामि मूर्द्ध्नि ब्रह्मबिलेश्वरीं ।

श्रीमदानन्दनाथाख्यश्रिगुरोपादुकां तथा ॥१२२॥

अथ प्राथमिके देवि चतुरश्रे कुलेश्वरि ।

अणिमांलखिमां वन्दे महिमां प्रणमाम्यहं ॥१२३॥

ईशित्वसिद्धि कलये वशित्वं प्रणमाम्यहं ।

प्राकाम्यसिद्धिम्भुक्तिञ्च इच्छाप्राप्तिमहं भजे ॥१२४॥

सर्व्वकामप्रदां सर्व्वकामसिद्धिमहं भजे ।

मद्ध्यमेचतुरश्रेहं ब्राह्मीं माहेश्वरीं भजे ॥१२५॥

कौमारीं वैष्णवीं वन्दे वाराहीं प्रणमाम्यहं ।

माहेन्द्रीमपिचामुण्डांमहालक्ष्मीमहं भजे ॥१२६॥

तृतीये चतुरश्रे तु सर्व्वसंक्षोभिणीं भजे ।

सर्व्वविद्रापिणींमुद्रां सर्व्वाकर्षिणिकां भजे ॥१२७॥

मुद्रां वशङ्करीं वन्दे सर्व्वोन्मादिनिकां भजे ।

भजेमहाङ्कशां मुद्रां खेचरीं प्रणमाम्यहं ॥१२८॥

बीजामुद्रां योनिमुद्रां भजे सर्व्वत्रिखण्डिनीं ।

त्रैलोक्यमोहनञ्चक्रं नमामि ललिते तव ॥१२९॥

नमामि योगिनीं तत्र प्रखटाख्यामभीष्टदां ।

सुधार्ण्णवासनंवन्दे तत्र ते परमेश्वरि ॥१३०॥

चक्रेश्वरि महं वन्दे त्रिपुरां प्रणमाम्यहं ।

सर्व्वसंक्षोभिणींमुद्रां ततोहं कलये शिवे ॥१३१॥

अथाहं षोडशदले कामाकर्षिणिकां भजे ।

बुद्ध्याकर्षिणिकांवन्देहङ्काराकर्षिणिकां भजे ॥१३२॥

शब्दाकर्षिणिकां वन्दे स्पर्शाकर्षिणिकां भजे ।

रूपाकर्षिणिकांवन्दे रसाकर्षिणिकां भजे ॥१३३॥

गन्धाकर्षिणिकां वन्दे चित्ताकर्षिणिकां भजे ।

धैर्याकर्षिणिकांवन्दे स्मृत्याकर्षिणिकां भजे ॥१३४॥

नामाकर्षिणिकां वन्दे बीजाकर्षिणिकां भजे ।

आत्माकर्षिणिकांवन्दे अमृताकर्षिणिकां भजे ॥१३५॥

शरीराकर्षिणिकां वन्दे नित्यां श्रीपरमेश्वरि ।

सर्व्वाशापूरकंवन्दे कल्पयेहं तवेश्वरि ॥१३६॥

गुप्ताख्यां योगिनीं वन्दे मातरं गुप्तपूज्यतां ।

पोताम्बुजासनन्तत्र नमामि ललिते तव ॥१३७॥

त्रिपुरेशीं नमस्यामि भजामिष्टार्त्थसिद्धिदां ।

सर्व्वविद्राविणिमुद्रान्तत्राहं ते विचन्तये ॥१३८॥

सिवे तवाष्टपत्रेहमनङ्गकुसुमां भजे ।

अनङ्गमेखलांवन्दे अनङ्गमदनां भजे ॥१३९॥

नमोहं प्रणस्यामि अनङ्गमदनातुरां ।

अनङ्गरेखाङ्कलये भजेनङ्गां च वेगिनीं ॥१४०॥

अनङ्गाकुशां वन्देह मनङ्गमालिनीं भजे ।

तत्राहम्प्रणस्यामि देव्या आसनमुत्तमं ॥१४१॥

नमामि जगतीशानीं तत्र त्रिपुरसुन्दरीं ।

सर्व्वाकर्षिणिकांमुद्रां तत्राह कलपयामिते ॥१४२॥

भुवनाश्रये तव शिवे सर्व्वसंक्षोभिणीं भजे ।

सर्व्वविद्राविणींवन्दे सर्व्वकर्षिणिकां भजे ॥१४३॥

सर्व्वह्लादिनीं वन्दे सर्व्वसम्मोहिनीं भजे ।

सकलस्तम्भिनीं वन्दे कलये सर्व्वजृम्भिणीं ॥१४४॥

वशङ्करीं नमस्यामि सर्व्वरञ्जिनिकां भजे ।

सकलोन्मदिनींवन्दे भजे सर्व्वार्त्थसाधके ॥१४५॥

सम्पत्तिपुरिकां वन्दे सर्व्वमन्त्रमयीं भजे ।

भजाम्येवततश्शक्ति सर्व्वद्वन्द्वक्षयङ्करीं ॥१४६॥

तत्राहं कलये चक्रं सर्व्वसौभाग्यदायकं ।

नमामिजगतां धात्रीं सम्प्रदायाख्ययोगिनि ॥१४७॥

नमामि परमेशानीं महात्रिपुरवासिनि ।

कलयेहन्तव शिवे मुद्रां सर्व्वशङ्करीं ॥१४८॥

बहिर्द्दशारे ते देवि सर्व्वसिद्धिप्रदां भजे ।

सर्व्वसम्पत्प्रदां वन्दे सर्व्वप्रियङ्करीं भजे ॥१४९॥

नमाम्यहं ततो देवीं सर्व्वमङ्गलकारिणीं ।

सर्व्वकामप्रदांवन्दे सर्व्वदुःखविमोचिनि ॥१५०॥

सर्व्वमृत्युप्रशमनीं सर्व्वविघ्ननिवारिणीं ।

सर्व्वाङ्गसुन्दरींवन्दे सर्व्वसौभाग्यदायिनीं ॥१५१॥

सर्व्वार्त्थसाधकं चक्रं तत्राहं ने विचिन्तये ।

तत्राहन्ते नमस्यामि कुलोत्तीर्णाख्य योगिनीं ॥१५२॥

सर्व्वमन्त्रसनं वन्दे त्रिपुराश्रियमाश्रये ।

कलयामिततो मुद्रां सर्व्वोन्मादन कारिणीं ॥१५३॥

अन्तर्दशारे ते देवि सर्वज्ञां प्रणमाम्यहं ।

सर्व्वशक्तिनमस्यामि सर्व्वैश्वर्यप्रदां भजे ॥१५४॥

सर्व्वज्ञानमयीं वन्दे सर्व्वव्याधिविनाशिनीं ।

सर्व्वाधारस्वरूपाञ्चसर्व्वपापहराम्भजे ॥१५५॥

सर्वानन्दमयि वन्दे सर्व्वरक्षास्वरूपिणीं ।

प्रणमामिमहादेवीं सर्वेप्सित फलप्रदां ॥१५६॥

सर्व्वरक्षाकरं चक्रं सुन्दरीं कलये सदा ।

निगर्भयोनींवन्दे तत्राहं प्रणमाम्यहं ॥१५७॥

साद्ध्यसिद्धासनं वन्दे भजे त्रिपुरमालिनीं ।

कलयामिततो देवीं मुद्रां सर्व्वमहाङ्कुशां ॥१५८॥

अष्टारे वशिनीं वन्दे महा कामेश्वरीं भजे ।

मोदिनींविमलांवन्दे अरुणाजयिनीं भजे ॥१५९॥

सर्वेश्वरीं नमस्यामि कौलिनीं प्रणमाम्यहं ।

सर्वरोगहरञ्चक्रं तत्राहं कलये सदा ॥१६०॥

नमामि त्रिपुरा सिद्धि भजे मुद्रां च खेचरीं ।

महात्रिकोणवत्बाहुचतुरश्रे कुलेश्वरि ॥१६१॥

नमामि जृम्भणाबाणं सर्व्वसंमोहिनीं भजे ।

पाशञ्चापं भजे नित्यं भजे स्तम्भनमङ्कुशं ॥१६२॥

त्रिकोणेहं जगद्धात्रीं महाकामेश्वरीं भजे ।

महावज्रेश्वरींवन्दे महाश्रीभगमालिनीं ॥१६३॥

महाश्रीसुन्दरीं वन्दे सर्व्वकामफलप्रदां ।

सर्व्वसिद्धिप्रदञ्चक्रं तवदेवि नमाम्यहं ॥१६४॥

नमाम्यतिरहस्याख्यां योगिनीं तवकामदां ।

त्रिपुराम्बांनमस्यामि बीजामुद्रामहाम्भजे ॥१६५॥

मूलमन्त्रेण ललिते तव्बिन्दौ पूजयाम्यहं ।

सर्वानन्दमयञ्चक्रं तवदेवि भजाम्यहं ॥१६६॥

परां पररहस्याख्यां योगिनीं तत्वकामदां ।

महाचक्रेश्वरींवन्दे योनिमुद्रामहं भजे ॥१६७॥

धूपदीपादिकं सर्वमर्प्पितं कल्पयाम्यहं ।

त्वत्प्रीतयेमहामुद्रां दर्शयामि ततश्शिवे ॥१६८॥

शाल्यन्नं मधुसम्युक्तं पायसापूप सम्युक्तं ।

घृतसूपसमायुक्तन्दधिक्षीरसमन्वितं ॥१६९॥

सर्व्वभक्ष्यसमायुक्तं बहुशाकसमन्वितं ।

निक्षिप्यकाञ्चने पात्रे नैवेद्यं कल्पयामि ते ॥१७०॥

सङ्कल्पबिन्दुना चक्रं कुचौ बिन्दुद्वयेन च ।

योनिश्चसपरार्द्धेन कृत्वा श्रीललिते तव ॥१७१॥

एतत् कामकला रूपं भक्तानां सर्व्वकामदं ।

सर्व्वसौभाग्यदंवन्दे तत्र त्रिपुरसुन्दरीं ॥१७२॥

वामभागे महेशानि वृत्तं च चतुश्रकं ।

कृत्वागन्धाक्षताद्यैश्चाप्यर्च्चयामि महेश्वरीं ॥१७३॥

वाग्दवाद्यं नमस्यामि तत्र व्यापकमण्डलं ।

जलयुक्तेनपाणौ च शुद्धमुद्रा समन्वितं ॥१७४॥

तत्र मन्त्रेण दास्यामि देवि ते बलिमुत्तमं ।

नमस्तेदेवदेवेशि नम स्त्रैलोक्यवन्दिते ॥१७५॥

नमश्शिववराङ्कस्थे नमस्त्रीपुरसुन्दरि ।

प्रदक्षिणनमस्कारमनेनाहं करोमि ते ॥१७६॥

तत सङ्कल्पमन्त्राणां समाजं परमेश्वरि ।

प्रजपामिमहाविद्यां त्वत् प्रीत्यर्त्थमहं शिवे ॥१७७॥

तव विद्यां प्रजप्त्वाथ नौमि त्वां परमेश्वरि ।

महादेविमहेशानि महाशिवमये प्रिये ॥१७८॥

महानित्ये महासिद्धे त्वामहं शरणं शिवे ।

जयत्वन्त्रिपुरे देवि ललिते परमेश्वरि ॥१७९॥

सदाशिव प्रियङ्करि पाहिमां करुणानिधे ।

जगन्मातर्ज्जगद्रूपेजगदीश्वरवल्लभे ॥१८०॥

जगन्मयि जगत् स्तुत्ये गौरि त्वामहमाश्रये ।

अनाद्येसर्व्वलोकानामाद्ये भक्तेष्टदायिनि ॥१८१॥

गिरिराजेन्द्रतनये नमस्तीपुरसुन्दरि ।

जयारीञ्जयदेवेशिब्रह्ममातर्महेश्वरि ॥१८२॥

विष्णुमातरमाद्यन्ते हरमातस्सुरेश्वरि ।

ब्रह्म्यादिमातृसंस्तुत्ये सर्व्वाभरण सम्युक्ते ॥१८३॥

ज्योतिर्मयि महारूपे पाहिमां त्रिपुरे सदा ।

लक्ष्मीवाण्यादिसं पूज्ये ब्रह्मविष्णुशिवप्रिय ॥१८४॥

भजामि तव पादाब्जं देवि त्रिपुरसुन्दरि ।

त्वत्प्रीत्यर्थंयतः काञ्चीच्छक्ति वैपूजयाम्यहं ॥१८५॥

ततश्च केतनां शक्ति तर्पयामि महेश्वरि ।

तथापित्वां भजंस्तोषं चिदग्नौ च ददाम्यहं ॥१८६॥

त्वत्प्रीत्यर्थयं महादेवि ममाभीष्टार्त्थ सिद्धये ।

बद्ध्वात्वां खेचरीमुद्रां क्षमस्वोद्वासयाम्यहं ॥१८७॥

तिष्तमे हृदयेनित्यं त्रिपुरे परमेश्वरि ।

जगदंमहाराज्ञि महाशक्ति शिवप्रिये ॥१८८॥

हृच्चक्रे तिष्तमे नित्यं महात्रिपुरसुन्दरि ।

एतत्त्रिपुरसुन्दर्या हृदयं सर्वकामदं ॥१८९॥

महारहस्यं सततं दुर्ल्लभं दैवतैरपि ।

साक्षात्सदाशिवेनोक्तं गुह्यात् गुह्यमनुत्तमं ॥१९०॥

यः पतेत् श्रद्धया नित्यं शृणुयाद्वा समाहितः ।

नित्यपूजाफलन्देव्यास्सलभेन्नात्र संशयः ॥१९१॥

पापैः समुच्यते सद्यः कायवाक्क सित्तसम्भवैः ।

पूर्वजन्मसमुत् भ्रदतैर्ज्ञानाज्ञकृतैरपि ॥१९२॥

सर्वक्रतुषुयत् पुण्यं सर्वतीर्थेषु यर्फलं ।

तत्पुण्यं लभते नित्यं मानवो नात्र संशयः ॥१९३॥

अचलां लभते लक्ष्मीं त्रैलोक्येनाति दुर्लभां ।

साक्षाद्विष्णुर्महालक्ष्याशीघ्रमेव भविष्यति ॥१९४॥

अष्टैश्वर्य मवाप्नोति स शीघ्रं मानवोत्तमः ।

घण्डिकापादुकासिद्ध्यादिष्टकंशीघ्रमश्नुते ॥१९५॥